कौं पुं

स्यसदृढभक्तिः स्त्रीत्वविवक्षायांतुदृढाभक्तिः तसिलादिष्वाकृत्वसु
चः तसिलादिषुकृत्वसुजंतेषुस्त्रियाःपुंवत्स्यात् त्रतसौ तरपतमप्
यौ चरट्जातीयरौ कल्पपदेशीयरौ रूपपपाशपौ थाल्तिल्थ्यनौ
एषुस्त्रियाःपुंवत् वह्वीषुबह्वत्तः बहुतइत्यादि त्वतलोर्गुणवच
नस्य पुंस्त्वायाभावः शुक्लत्वं शुक्लता गुणवचनस्यकिम् कत्र्या
५ भावःकर्त्रीत्वं भस्याढेतद्धिते हस्तिनीनांसमूहोहास्तिकं ढकिकिं
रौहिणेयः कुक्कुट्यादीनामंडादिषु कुक्कुटांडं मृगपदं मृगक्षीरंम
काकशावः क्यङ्मानिनोश्च पुंवत् एनीवाचरति एतायते श्येनी
वाचरति श्येनायते दर्शनीयांमन्यते दर्शनीयमानी नकोपधायाः

तदंतात्प्रमाण्यंताद्भवदुव्रीहेरयस्यात् कल्याणीपंचमीयासांरात्रीणां

ताः कल्याणीपंचमारात्रयः स्त्रीप्रमाणीयस्यस्त्रीप्रमाणः पुंवद्भावनि

षेधोऽप्प्रत्ययश्चप्रधानपूरण्यामेव रात्रिःपूरणीवाच्या चेत्युक्तोदाहर

णेपूरणीमुख्या अन्यत्रतु नद्यृतश्च नद्युत्तरपदाद्द्वंतोरपदाद्भवइ त

व्रीहेःकप पुंवद्भावःकेणः ह्रस्वइतिप्राप्ते नकपि इस्वः कल्याणपं

चमीकः पक्षः अत्रतिरोहितावयवभेदस्यपक्षस्यान्यपदार्थतयारात्रि

रप्रधानं वहुकर्तृकः अप्रियादिषु किं कल्याणीप्रियः प्रिया मनो

ज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्वसा कांता क्षांता समा

चपला दुहिता वामा अवला तनया सामान्येनपुंसकं दृढंभक्तिये

ॐ समस्यंतेसबहुव्रीहिः बहुव्रीहौसंख्येयेऽजबहुगणात् संख्यायाऽव्ययो
बहुव्रीहिस्तस्माऽच्समासांतः दशानांसमीपेयेसंतितेउपदशाः
नववएकादशावेत्यर्थः अबहुगणात्किं उपबहवः उपगणाः ति
विंशतेर्डिति विंशतेर्भस्यतेर्लोपोडिति आसन्नविंशाः अदूरत्रिंशाः
अधिकचत्वारिंशाः द्वौवात्रयोवाद्वित्राः दिङ्नामान्यंतराले दि
२ शोनामान्यंतरालेवाच्येप्राग्वत् दक्षिणस्याःपूर्वस्याश्चदिशोंतरालं द
क्षिणपूर्वा तत्रतेनेदमितिसरूपे सप्तम्यंतेग्रहणविषयेसरूपेपदे
तृतीयांतेचप्रहरणविषयेऽइदंयुद्धंप्रवृत्तमित्यर्थे समस्यतेकर्मव्य
तिहारेद्योतेसबहुव्रीहिः अन्येषामपिदृश्यते ऽचकर्मव्यतिहारे

मद्रिकायते मद्रिकामानिनी कोपधप्रतिषेधे तद्धितवुग्रहणं नेह पाकभार्य्यः संज्ञापूरण्योश्च नपुंस्वत् दत्ताभार्य्यः ३।०।१॥

ग

स्त्रियाः पुंवत् पाचिकाभार्यः रसिकाभार्यः पंचमीभार्यः वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे वृद्धिशब्देन विहिताया वृद्धेस्तद्धेतुर्यस्तद्धितोरक्तविकारार्थस्तदंतास्त्रीनपुंवत् स्रौघ्नीभार्या माथुरीयते माथुरीमानिनी वृद्धिनिमित्तस्य किम् मध्यमभार्यः रक्तेतु काषायीकन्थायस्य काषायकन्थः विकारेतु हैमीमुद्रिकायस्य हैममुद्रिकः स्वांगाच्चेतः स्वांगाद्य ईकारस्तदंतास्त्रीनपुंवत् सुकेशीभार्यः स्वांगात्किं पटुभार्यः ईतः किम् अकेशाभार्यः अमानिनीतिवक्तव्यम् सुकेशमानिनी जातेश्च नपुंवत् शूद्राभार्यः संख्यायाव्ययासन्नादूराधिकसंख्याः संख्येये संख्ययाव्ययासंख्ययाव्ययादयः

ओं जाह्नी स्वांगात्किम दीर्घसक्थिसकठे स्थूलाद्यावेणायवि: अ
ल्गोदर्शनादिति वक्ष्यमाणाच्च द्वित्रिभ्यांच मूर्द्ध्नः द्विमूर्द्धः त्रिमूर्द्धः
अंतर्वहिर्भ्यांच लोम्नः अपस्यात अंतर्लोमः वहिर्लोमः पादस्य
लोपोहस्त्यादिभ्यः हस्त्यादिवर्जितादुपमानात्परस्य पादस्य लो
व पः व्याघ्रस्येव पादस्य व्याघ्रपात् अहस्त्यादिभ्यः किम हस्तिपा
3 दः कुम्भुलपादः संख्यासुपूर्वस्य पादस्य लोपः द्विपात सुपात
उद्विभ्यां काकुदस्य लोपः उत्काकुत् विकाकुत पूर्णाद्विभाषा
पूर्णकाकुत पूर्णकाकुदः सुहृद्दुर्हृदौ मित्रामित्रयोः सुहृन्मि
त्रं दुर्हृदमित्रं नेतुर्नक्षत्रे ब्रुतव्यः मृगोनेता यासां रात्रीणां ताः

सुदुर्भ्यां हृदयस्य हृदन्तावनिपात्यते

वहुव्रीहौ पूर्वपदांतस्य दीर्घः केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि दंडैश्च दंडैश्च प्रहृत्य इदं युद्धं प्रवृत्तं दंडादंडि मुष्टीमुष्टिः तेन सहेति तुल्ययोगे तुल्ययोगे वर्तमानं सहेत्येतत्तृतीयांतेन प्राग्वत् वोपसर्जनस्य वहुव्रीहेरवयवस्य सहस्य सः स्याद्वा पुत्रेण सह सपुत्रः सहपुत्रो वागतः तुल्यवचनं प्रायिकं सकर्मकः सलोमकः प्रकृत्याशिषि सहस्याद्वः प्रकृत्या स्यादाशिषि स्वस्ति राज्ञे सहपुत्राय सहामात्याय अगोवत्सहलेष्विति वक्तव्यम् सगवे सवत्साय सहलाय वहुव्रीहौ सक्थ्यक्ष्णोः स्वांगात् षच् स्वांगवाचिसक्थ्यक्ष्यंताद्वहुव्रीहेः षच् दीर्घसक्थः जल

कौमु क्थ्यः एवं दुःसुभ्यां सक्थ्योरिति पाठांतरम् असक्थः असक्थिः
नित्यमसिच् प्रजामेधयोः नञ्दुःसुभ्य एव अप्रजाः दुःप्रजाः सु
प्रजाः अमेधाः दुर्मेधाः सुमेधाः धर्मादनिच्केवलात् केवल
पूर्वपदाद्योधर्मशब्दस्तदंताद्बहुब्रीहेरनिच् कल्याणधर्मा केव
4 लात्किम् परमःस्वोधर्मोयस्येतित्रिपदेबहुब्रीहौमाभूत् इच्क
र्मव्यतिहारे केशाकेशिः मुशलामुशलि प्रसंभ्यांजानुनोर्ज्ञुः प्र
गते जानुनीअस्य प्रज्ञुः संज्ञुः ऊर्द्ध्वाद्विभाषा ऊर्द्ध्वज्ञुः ऊर्द्ध्वजानुः
धनुषश्च धनुरंतस्यबहुब्रीहेरनङादेशः शार्ङ्गधन्वा वासंज्ञायाम्
शतधन्वा शतधनुः जायायानिङ् जायांतस्यबहुब्रीहेर्निङादेशः

मगने त्रारान्नयः अजनासिकायाः संज्ञायां नसं चास्थूलात् नासि
कांताद्बहुव्रीहेरच् नासिकायाश्च नसं प्राप्नोति न तु स्थूल पूर्वप
दात् पूर्वपदात्संज्ञायामगः पूर्वपदस्थान्निमित्तान्नस्य णः स्या
त्संज्ञायां न तु गकारव्यवधाने द्रुरिव नासिका यस्य द्रुणसः खुर
खराभ्यां वा नस् खुरणाः पक्षे अजपीष्यते खुरणसः खरणसः
उपसर्गाच्च प्रादेर्नासिकांताद्बहुव्रीहेरच् नासिकाया नसादेशश्च
असंज्ञार्थं वचनं उन्नता नासिका यस्य उन्नसः वेर्ग्रो वक्तव्यः
विगता नासिका यस्य विग्नः ख्यश्च विख्यः नञ्दुःसुभ्यो हलि
सक्थ्योरन्यतरस्याम् अच् अहलः अहलि असक्थः अस

कौ० ६

वाग्मिका स्त्रियां किम् वहुदण्डी [illegible] वहुदण्डिको ग्रामः शेषाद्वि भा
षा अनुक्तसमासांताद्बहुव्रीहेः कप् महायशस्कः महा यशाः अ
नुक्तेत्यादि किम् व्याघ्रपात् सुगंधिः उपवहवः उत्तरपूर्वा सप्तर्चः
आपोऽन्यतरस्याम् कपिद्वस्वः वहुमालाकः वहुमालकः वहुमा
लाः नसंज्ञायाम् शेषादिति प्राप्तः कप् न विश्वेदेवा अस्य विश्वदेवः
5 ईयसश्च ईयसंतोत्तरपदान्नकप् वहवः श्रेयांसोऽस्य वहुश्रेयान्
गोस्त्रियोरिति ह्रस्वप्राप्ते ईयसो वहुव्रीहेर्न वहुश्रेयसी वहुव्रीहेः किम् नन
अतिश्रेयसि वंदिते भ्रातुः पूजायां भ्रात्रंतान्नकप् प्रशस्तो भ्राता
स्य प्रशस्तभ्राता सुभ्राता वन्दिते किं मूर्खभ्रातृकः नेतात्संख्य

लोपो व्योर्वलि पुंवद्भावः युवतिर्जायायस्य युवजानिः गंधस्येदु
त्पूतिसुसुरभिभ्यः एभ्योगंधस्येकारांतादेशः उद्गंधिः पूतिगंधिः
सुगंधिः सुरभिगंधिः उपमानाच्च पद्मस्येवगंधोयस्य पद्मगंधिः व
यसिदंतस्यदतृ संख्यासुपूर्वस्येत्येव द्विदन् चतुर्दन् वयसीतिकि
म् द्विदंतःकरी सुदन् षड्दन्ताअस्य षोडन् अग्रांतशुद्धशुभ्रवृषव
राहेभ्यश्च वा कुड्मलाग्रदंतः कुड्मलाग्रदन् उरःप्रभृतिभ्यःकप् व्यूढोरस्कः
प्रियसर्पिष्कः अर्थान्नञः अनर्थकम् नञः किं अपार्थकम् अपार्थ
कम् इनःस्त्रियाम् इन्नंताद्बहुव्रीहेःकप् बहुदंडिकानगरी अनि
नस्मन्ग्रहणान्यर्थवताचानर्थकेनचतदंतविधिंप्रयोजयंति बहु

कौ॰ टि॰ येति अन्यतरस्यानुषंगिकत्वे वान्वयः अनयोरसामर्थ्यात्समासो
न धवखदिरौ छिंधीति मिलितानामन्वयः इतरेतरयोगः संज्ञा
परिभाषमिति समूहः समाहारः राजदन्तादिषु परम् एषु पूर्व
6 प्रयोगार्हं परं स्यात् दंतानां राजा राजदंतः धर्मादिष्वनियमः अ
र्थधर्मौ धर्मार्थौ दंपती जंपती जायापती जायाया जंभावो दंभा
वश्च वा निपात्यते आकृतिगणोयम् द्वंद्वे घि पूर्वं स्यात् हरिह
रौ अजाद्यदंतं ईशकृष्णौ अल्पाच्तरम् शिवकेशवौ ऋतुन
क्षत्राणां समाक्षराणामानुपूर्व्येण हेमंतशिशिरवसंताः कृत्ति
कारोहिण्यौ समाक्षराणां किम् ग्रीष्मवसंतौ लघ्वक्षरं पूर्वं कु

र्योः बहुव्रीहौ पूर्वनिपातः सर्वेष्वेतः द्विष्णुक्ताः संख्यायाअन्ती
यस्याः द्वित्राः द्वंद्वेच द्वादश वाप्रियस्य गुडप्रियः प्रियगुडः
गड्वादेः परा सप्तमी गडुकंठः क्वचिन्न वहेगडुः निष्ठानिष्ठांतं
बहुव्रीहौ पूर्वस्यात कृतकृत्यः जातिकालसुखादिभ्यः परानि
ष्ठावाच्या सारंगजग्धी मासजाता सुखजाता वाहिताग्न्यादिषु
आहिताग्निः अग्न्याहितः आकृतिगणोयं ॐ इतिबहुव्रीहिः
चार्थे द्वंद्वः अनेकं सुबंतं चार्थे वर्त्तमानं वासमस्यते सद्वंद्वः समुच्च
यान्वाचयेतरेतरयोगसमाहारास्चार्थाः तत्रेश्वरं गुरुंच भजस्वेति
परस्परनिरपेक्षस्यानेकस्य...समुच्चय...

कौं
द्वं

लिङ्गं अश्वनकुलात् क्षुद्रजंतवः येषां विरोधः शाश्वतिकः प्राग्वच
त अहिनकुलं गोव्याघ्रं काकोलूकमित्यादौ परत्वाद्विभाषाह्रदे
तिप्राप्तं चकारेणबाध्यते शूद्राणामनिरवसितानाम् अबहिष्कृता
नांशूद्राणां द्वंद्वः प्राग्वत् तक्षायस्कारं पात्राद्बहिष्कृतानांतु चंडाल
7 मृतपाः गवाश्वप्रभृतीनि च यथोच्चारितानि साधूनि गवाश्वम्
दासीदासमित्यादि विभाषा वृक्षमृगतृणधान्यव्यंजनपशुशकुन्य
श्ववडवपूर्वापराधरोत्तराणां वृक्षादीनां सप्तानां द्वंद्वः अश्ववडवे
त्यादि द्वंद्वत्रयं प्राग्वत् तद्वा वृक्षादौ विशेषाणामेव ग्रहणं प्लक्ष
न्यग्रोधं प्लक्षन्यग्रोधाः रुरुपृषतं रुरुपृषताः कुशकाशं कुश

णाकाणं अभ्यर्हितंच तापसपर्वतौ वर्णानामानुपूर्व्येण ब्राह्म
णक्षत्रियविट्शूद्राः भ्रातुर्ज्यायसः युधिष्ठिरार्जुनौ द्वंद्वश्च प्रा
णितूर्यसेनांगानां एषां द्वंद्व एकवत् पाणिवादं मार्दंगिकपाणवि
कं रथिकाश्वारोहं अध्ययनतोविप्रकृष्टाख्यानां अध्ययनेनप्र
त्यासन्नाख्यायैषांतेषांद्वंद्वएकवत् पदकक्रमकम् जातिर
प्राणिनाम् प्राणिवर्जजातिवाचिनांद्वंद्वएकवत् धानाशष्कुलि
प्राणिनांतु क्षत्रियविट्शूद्राः विशिष्टलिंगोनदीदेशोग्रामाः ग्राम
वर्जनदीदेशवाचिनांभिन्नलिंगानांद्वंद्वएकवत् उध्यश्चइरावती
गंगाशोणं कुरवश्चकुरुक्षेत्रं क्षुद्रजंतवः एषांद्वंद्वएकवत् यूका

कौ॰ ६३

तापुत्रौ देवताद्वंद्वे च इहोत्तरपदे परे आनङ्‌ः मित्रावरुणौ वायोः
प्रयोगो प्रतिषेधः अग्निवायू वाय्वग्नी ईदग्नेः सोमवरुणयोः
देवताद्वंद्वे इत्येव अग्नेस्तुत्स्तोमसोमाः अग्नेः परेषामेषां सस्य
षस्यात्समासे अग्निष्टुत् अग्निष्टोमः अग्नीषोमौ अग्नीवरुणौ
इद्वृद्धौ वृद्धिमत्युत्तरपदे अग्नेरिदादेशो देवताद्वंद्वे अग्नामरुतौ
४ देवते अस्य आग्निमारुतं कर्म अग्नीवरुणौ देवते अस्य आग्निवा
रुणं देवताद्वंद्वे इत्युभयपदवृद्धिः विशेषेण आग्नावैष्णवं दिवो
द्यावा देवताद्वंद्वे उत्तरपदे द्यावाभूमी मातरपितरावुदीचाम् उ
दीचां किम् मातापितरौ द्वंद्वाच्चुदषहान्तात्समाहारे चवर्गांता

काराः व्रीहियवं व्रीहियवाः दधिघृतं दधिघृते गोमहिषं गो
महिषाः शुकवकं शुकवकाः अश्ववडवं अश्ववडवौ पूर्वा
परं पूर्वापरे अधरोत्तरं अधरोत्तरे फलसेनावनस्पतिमृगशकु
नि क्षुद्रजंतुधान्यतृणानां वहुप्रकृतिरेवद्वंद्वएकवदितिवाच्यं व
दराणि चामलकानि च वदरामलकं नेह वदरामलके रथिका
श्वारोहावित्यादि नदधिपयआदीनि नएकवत्स्युः दधिपयसी
इध्मावर्हिषी नियानाद्दीर्घः ऋक्सामे वाङ्मनसे आनङ् ऋतो
द्वंद्वे विद्यायोनिसंवंधवाचिनामृदंतानां आनङ् स्यात् उत्तरपदे हो
ता पोतारौ होतापोतानेष्टोद्गातारः मातापितरौ पुत्रेणसहितः पि

कौ°

नः शुनःशेपः शुनःपुच्छः शुनोलांगूलः दिवश्चदासे दिवोदासः
ऋतोविद्यायोनिसंबंधेभ्यः विद्यायोनिसंबंधवाचिनऋदंतात्परस्या
अलुक् होतुरंतेवासी पितुरंतेवासी विभाषास्वसृपत्योः ऋदंतात्स्व
स्रोः मातुःपितुर्भ्यामन्यतरस्याम् स्वसुःसस्य षस्यात्समासे मातुः
ष्वसा मातुःस्वसा पितुःस्वसा पितुःष्वसा लुक्पक्षे तु मातृपितृभ्यां
९ स्वसा स्वसुःसस्य षस्यात्समासे मातृष्वसा पितृष्वसा असमासे तु
मातुःस्वसा पितुःस्वसा इत्यलुक्समासः घरूपकल्पचेलड्ब्रुव
गोत्रमतहतेषु ङ्योनेकाचो ह्रस्वः भाषितपुंस्काद्ङ्योङीयतदंतस्या
नेकाचो ह्रस्वः घरूपकल्पप्रत्ययेषु चेलडादिषु चोत्तरपदेषु ब्राह्म

तिसमासः हृद्द्युभ्यांच हृदिस्पृक् दिविस्पृक् मध्याद्गुरौ मध्येगुरुः
अंताच्च अंतेगुरुः अमूर्द्धमस्तकात्स्वांगादकामे कंठेकालः उर
सिलोमः अमूर्द्धमस्तकात्स्वांगात्किं मूर्द्धशिखः मस्तकशिखः अ ना
कामेकिं मुखकामः तत्पुरुषेकृतिबहुलं स्तंबेरमः कर्णेजपः
शयवासवासिष्वकालात् वा लुक् खेशयः खशयः ग्रामेवासः
ग्रामवासः ग्रामेवासी ग्रामवासी षष्ठ्या आक्रोशे चौरस्यकुलं आ
क्रोशेकिम् ब्राह्मणकुलं वाग्दिक्पश्यद्भ्यो युक्तिदंडहरेषु वाचो
युक्तिः दिशोदंडः पश्यतोहरः अमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेअमुष्य
तिच देवानांप्रियइतिमूर्खे [illegible] देवप्रियः शेपपुच्छलांगूलेषु शु

कौं २२ त्रेयतयजंतमजंतंचतद्ववयवयोरेतयोर्लुक तत्कृतेवहुत्वेनतुस्त्रि
याम् गर्गाः वत्साः गोत्रेलुगचि अजादौ प्राग्दीव्यतीयेन विवक्षिते
सूय गोत्रेप्रत्ययांतलुकस्यात गर्गाणां छात्राः वक्ष्यमाणो वृद्धाच्छः आप
त्यस्यचतद्धितेनाति हलःपरस्यापत्यस्यलोपस्तद्धितेनत्वाकारे गार्गी
याः प्राग्दीव्यतीयेकिम् गर्गेभ्योहितंगर्गीयं अचिकिम् गर्गेभ्यआ
10 गतंगर्गरूप्यं जीवतितुवंश्येयुवा वंश्येपित्रादौजीवतिपौत्रादेर्यदप
त्यंचतुर्थादितद्युवसंज्ञमेवस्यात गोत्राद्यून्यस्त्रियाम् यून्यपत्येविवक्ष्य
माणेगोत्रप्रत्ययांतादेवप्रत्ययःस्यात्स्त्रियांतुनयुवसंज्ञा यञिञोश्च गो
त्रेयौयञिञौतदंतात्फक आयनेयीनीयियःफढखछघांप्रत्यया

स्यपत्यादि विकारांतार्थाः साधारणाः प्रत्ययाः स्त्रीपुंसाभ्यां नञ्स्नञौ
भवनात् धान्यानां भवन इत्यतः प्रागर्थे द्वाभ्यामेतौ स्तः स्त्रैणः पौंस्नः
तस्यापत्यं षष्ठ्यंतात् कृतसंधेः समर्थादपत्येर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया
वा स्युः ओर्गुणः उवर्णांतस्य भस्य गुणस्तद्धिते उरोदितिवत्तत्ये गुणो
क्तिः संज्ञापूर्वको विधिरनित्य इति ज्ञापयितुं तेन स्वायंभुवमित्यादि सि
ग द्धं उपगोरपत्यमौपगवः आश्वपतः दैत्यः औत्सः स्त्रैणः पौंस्नः अप
त्यं पौत्रप्रभृति गोत्रं अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् एको
गोत्रे गोत्रे एक एव प्रत्ययः स्यात् उपगोर्गोत्रापत्यं औपगवः गार्ग्यादि
भ्यो यञ् गोत्रापत्ये गर्गस्य गोत्रापत्यं गार्ग्यः वात्स्यः यञञोश्च गो

श्रीः सुदेवः कुरव्यः नाकुलः साहदेवः मातुरुत्संख्यासंभद्रपूर्वायाः संख्य
दिपूर्वस्य मातृशब्दस्य उदादेशः स्यादण्प्रत्ययश्च द्वैमातुरः षाण्मातुरः
सांमातुरः भाद्रमातुरः स्त्रीभ्यो ढक् स्त्रीप्रत्ययांतेभ्यो ढक् वैनतेयः
कन्यायाः कनीन च चादण् कानीनो व्यासः कर्णश्च राजश्वशुराद्यत्
11 राज्ञो जातावेवेति वाच्यम् ये चाभावकर्मणोः यादौ तद्धिते प्रत्यये अन्
न प्रकृत्या स्यान्न तु भावकर्मणोः राजन्यः जातावेवेति किं अन्
प्रकृत्याणिपरे राजनः श्वशुर्यः क्षत्राद्घः क्षत्रियः जातावित्येव ब्रह्म
क्षत्रियः रेवत्यादिभ्यष्ठक् ठस्येकः अंगात्परस्य ठस्येकादेशः रैवतिकः
गोत्रे कुंजादिभ्यश्च्फञ् ब्रातच्फञोरस्त्रियाम् ब्रातवाचिभ्यश्च्फञं

दीनाम् प्रत्ययार्थैः दैं फस्यायन् ढस्य एय घंखस्य ईन छस्य ईयघस्य
इय इत्येते आदेशा भवंति गर्गस्य युवा ग्यत्यं गार्ग्यायणः दाक्षायणः
अतइञ् अपत्येर्थे दाक्षिः बाह्वादिभ्यश्च बाहविः औडुलोमिः औडु
लौमी लोम्नोपत्येषु बहुष्वकारो वक्तव्यः बाह्वादीञोपवादः उडुलो
माः आकृतिगणोयम् अनृष्यानंतर्ये विदादिभ्योञ् येत्वत्रानृषय
स्तेभ्योपत्येञ् अन्यत्र तु गोत्रे विदस्य गोत्रं वैदः वैदौ विदाः पौत्रः य
जेनोक्तं तिसृत्वे प्रवराध्यायप्रसिद्धं गोत्रं तेनेह न पौत्राः एवं दौहित्रा
दयः शिवादिभ्योण् अपत्ये शैवः गांगाः ऋष्यंधकवृष्णिकुरुभ्यश्च
ऋषिभ्यः वासिष्ठः वैश्वामित्रः अंधकेभ्यः श्वाफल्कः वृष्णिभ्यः वा

ल्टेयः सती भिक्षुकान्न कुलटा चटकाया ऐरक् चटकादिति वाच्यम्
प्रातिपदिकग्रहणे लिंगविशिष्टस्यापि ग्रहणमिति सिद्धमिति चटकस्य
चटकाया वा अपत्यं चाटकैरः स्त्रियामपत्ये लुग्वक्तव्यः तयोरेव स्त्र्य
पत्यं चटका गोधाया ड्रक् गौधेरः शुभ्रादित्वात् पक्षे ढक् गौधेयः
क्षुद्राभ्यो वा अंगहीनाः शीलहीनाश्च क्षुद्रास्ताभ्यो वा ड्रक् पक्षे ढ
22 क् काणेरः काणेयः दासेयः दासेरः पितृष्वसुश्छण् अणोपवादः
पैतृष्वस्रीयः ढकि लोपः पितृष्वसुर्लोपो ढकि अत एव ज्ञापकात् ढ
क् पैतृष्वसेयः मातृष्वसुश्च पितृष्वसुर्यदुक्तं तदस्यापि स्यात् मातृष्व
स्रीयः मातृष्वसेयः कुलात्खः तदंतादपि उत्तरसूत्रे च अपूर्वपदादि

तेभ्यश्चस्वार्थेञ्यप्रत्ययःस्यात् कौंजायन्यः वहुत्वेलुग्वक्ष्यते कौंजा
यनाः व्राध्नायन्यः नडादिभ्यःफक् गोत्रइत्येव नाडायनः चारायणः
अनंतरोनाडिः अश्वादिभ्यःफञ् गोत्रे आश्वायनः इतश्चानिञः इका
रांताद्द्व्यचोपत्येढक्नत्विञंतात् दौलेयः नैधेयः आत्रेयः आत्रेयौ
अत्रिभृगुकुत्सवसिष्ठगोतमांगिरोभ्यश्च एभ्योगोत्रप्रत्ययस्यतत्कृते
वहुत्वेलुक्स्यान्नतुस्त्रियाम् अत्रयः भृगवः कुत्साः वसिष्ठाः गो
तमाः अंगिरसः शुभ्रादिभ्यश्च ढक्स्यात् अपत्ये शौभ्रेयः कल्या
ण्यादीनामिनङ्स्यात् ढक्च काल्याणिनेयः वांधकिनेयः कुलटाया
वा इनङ्मात्रं विकल्पतेढक्तु नित्यएव एवेति कौलटिनेयः कौ

ॐ प्राचामवृद्धात्फिन्बहुलम् ग्लुचुकायनि जनपदशब्दात्क्षत्रिया
दञ् जनपदक्षत्रिययोर्वाच्यकादञपत्ये पांचलः क्षत्रियसमानश
ब्दाज्जनपदात्तस्यराजन्यपत्यवत् पंचालानांराजा पांचलः पूरोरण् पौ
रवः द्व्यञ्मगधकलिंगसूरमसादण् अञोपवादः द्व्यच् आंगः वां
गः मागधः कालिंगः सौरमसः पाण्डोर्ड्यण् पांड्यः वृद्धेत्कोशला
13 जादाञ्ञ्यङ् वृद्धात् आंबष्ठ्यः इत आवंत्यः कौः कौशल्यः अजा
दस्यापत्यं आजाद्यः कुरुनादिभ्योण्यः कौरव्यः नैषध्यः तेतद्राजाः
अञादयस्तद्राजसंज्ञास्युः तद्राजस्यबहुषुतेनैवास्त्रियाम् बहुष्व
र्थेषुतद्राजस्यलुकतल्कृतेबहुत्वेनतुस्त्रियाम् पंचालाः इत्यादि क

तिल्लिंगात् आढ्यकुलीनः अपूर्वपदादन्यतरस्यां यत्ढकञौ कुला
दित्येव पक्षे खः कुल्यः कौलेयकः कुलीनः महाकुलादञ्खञौ
वास्तः पक्षे खः माहाकुलः माहाकुलीनः दुष्कुलाड्ढक् वा पक्षे खः
दौष्कुलेयः दुष्कुलीनः स्वसुश्छः स्वस्रीयः भ्रातुर्व्यच्च चाच्छः भ्रा
तृव्यः भ्रात्रीयः मानोर्जातावञ्यतौषुक् समुदायार्थ्येयातिः मानुषः
मानुष्यः तद्धितार्थे उपसंख्यानं षपूर्वहन्धृतराज्ञामणि षपूर्वस्य
९ नतस्य हननादेश्च आतितिक्तेभस्याकारलोपः ताह्नाः तिकादिभ्यः फि
ञ् तैकायनिः वृद्धिर्यस्याचामादिस्तद्वृद्धं यस्य समुदायस्याचां मध्ये
आदिर्वृद्धिस्तद्वृद्धसंज्ञः स्यात् उदीचां वृद्धादगोत्रात् आम्रगुप्तायनिः

कौं
६ संख्यानम् शाकलिकः कार्दमिकः नील्या अन् नील्या रक्तं नीलं पीता
त्कन् पीतकम् हरिद्रामहारजनाभ्यामञ् हारिद्रं माहारजनम् नक्ष
त्रेण युक्तः कालः तिष्यपुष्ययोर्नक्षत्राणि यलोपः पुष्येण युक्तं पौषमा
हः पौषीरात्रिः लुबविशेषे पूर्वेणाविहितस्य लुप् अष्टदंडात्मकस्य
कालस्यावांतरविशेषश्चेन्न गम्यते अद्य पुष्यः दृष्टं साम तेनेतेव वसि
14 ष्ठेन दृष्टं वासिष्ठं साम वामदेवाड्ड्यड्ड्यौ वामदेवेन दृष्टं साम वाम
देव्यम् परिवृतो रथः वस्त्रेण परिवृतो वास्त्रो तत्रोद्धृतममत्रेभ्यः
शरावे उद्धृतः शाराव ओदनः संस्कृतं भक्षाः सप्तम्यंतादण्स्यात्संस्कृ
तेऽर्थे यत् संस्कृतं भक्षाश्चेत्तेस्युः भ्राष्ट्रे संस्कृता भ्राष्ट्राः भक्षाः शूलोखा

म्बोजाल्लुक् तद्राजस्य कंबोजः कम्बोजादिभ्य इति वक्तव्यम् चोलः
शकः केरलः यवनः अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे त्र्या
दीनामंत्यमुत्तमम् तस्य समीपमुपोत्तमम् गोत्रे यावणिञौ विहितौ तदन्ता
वेतदन्तयोर्गुरूपोत्तमयोः प्रातिपदिकयोः स्त्रियां ष्यङादेशः ष्यङ्चा
प् कुमुदगंधे गोत्रापत्यं स्त्री कौमुदगंध्या वाराह्या अनार्षयोः कि
म् वासिष्ठी गुरूपोत्तमयोः किम् औपगवी गोत्रे किम् अहिच्छत्रे जा
ताऽऽहिच्छत्री इत्यपत्याधिकारः तेन रक्तं रागात् रज्यतेऽनेनेति रागः
कषायेण रक्तं वस्त्रं काषायम् मांजिष्ठं रागात्किम् देवदत्तेन रक्तं व
स्त्रं लाक्षारोचनाट्ठक् लाक्षिकः रौचनिकः शाकलकर्दमाभ्यामुप

ॐ ग्यं ३ अस्यं द्यावापृथिवीसुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधा
च्छ च चाद्युत द्यावापृथिवीयं द्यावापृथिव्यं सुनासीरीयं सुनासी
र्यं महाराजप्रोष्ठपदात्ठञ् माहाराजिकं प्रौष्ठपदिकं देवताद्वंद्वे
अन्नपूर्वोत्तरपदयोराद्यचोर्वृद्धिर्ञितिणितिकितिच आग्निमारुतं ने
15 न्द्रस्यपरस्य सौमेंद्रः परस्यकिम् ऐंद्राग्नः दीर्घाच्चवरुणस्य नवृद्धिः
देवताद्वंद्वेचेत्यागमः ऐंद्रावरुणः दीर्घात्किम् आग्निवारुणीमन
ड्वाही पितृव्यमातुल मातामहपितामहाः एतेनिपात्यंते पितुर्भ्राता
पितृव्यः मातुर्भ्रातामातुलः मातुःपितामातामहः पितुःपितापिताम
हः तस्यसमूहः काकानांसमूहःकाकं भिक्षादिभ्योऽण् भैक्षं गार्भि

द्यत अणोपवादः शूलेसंस्कृतंशूल्यंमांसं उख्यं दध्नष्ठक दधि
संस्कृतंदाधिकम् सास्मिन्पौर्णमासीति इतिप्राप्तेसंज्ञायामितिल
भ्यते पौषीपौर्णमासीअस्मिन्पौषोमासः सास्यदेवता इन्द्रोदेवता
यस्येदंहविः बार्हस्पत्यं वाप्युच्यते यजमानइत्येउद्देश्यविशेषोदे
वता मंत्रस्तुत्यात्र ऐंद्रोमंत्रः कस्येत् कयाह्रस्यइकारःस्यात्प्र
त्ययसंनियोगेन यस्येति लोपात्परत्वादादिवृद्धिः कोब्रह्मादेवता
कायंहविः श्रीर्देवतास्येतिश्रायम् शुक्राद्घन् शुक्रियं सोमाट्ट्य
ण् सौम्यं वाय्वृतुपित्रुषसोयत् वायव्यं ऋतव्यं रीङृतः अकृतय
कारेसार्वधातुकेयकारेच्वौचऋदंतांगस्यरीङादेशः यस्येतिच पि

ॐ ल् ग्रामता जनता वंधुता तलंतं स्त्रियाम् गजसहायाभ्यां चेति वक्त
व्यम् गजता सहायता अह्नः खः क्रतौ अहीनः अचित्तहस्तिधेनो
ष्ठक् इसुसुक्तांतात्कः इसुसुक्तंतदंतात्परस्यठस्यकः साक्तुकं
16 हास्तिकं धैनुकं केशाश्वाभ्यां यञ्छावन्यतरस्याम् पक्षे ठगणौ कैश्यं
कैशिकं आश्वीयं आश्वम् पाशादिभ्यो यः पाश्या तृण्या धूम्या वन्या
वात्या खलगोरथात् खल्या गव्या रथ्या इनित्रकट्यचश्च खलादि
भ्यः क्रमात्स्युः खलिनी गोत्रा रथकट्या खलादिभ्य इनिर्वक्तव्यः
डाकिनी कुटुंबिनी आकृतिगणोयम् तदस्यांप्रहरणमिति क्रीडा
यां णः दंडः प्रहरणमस्यां क्रीडायां दांडा मौष्टा घञः सास्यां क्रिये

णीनां समूहो गार्भिणं इत्यस्माट्ठ इति पुंवद्भावे कृते इनण्यनपत्ये
अनपत्यार्थे ण्इन प्रकृत्या तेन नस्तद्धिते इति टिलोपेन युवतीनां
समूहो यौवनं साम्भेतादनुदात्तादेरञि यौवनं गोत्रोक्षोष्ट्रोरभ्रा
जन्यराजपुत्रवत्समनुष्याजाद्वुञ् ग्लुचुकायनीनां समूहो ग्लौचु
कायनकं औक्षकमित्यादि आपत्यस्येति यलोपे प्राप्ते प्रकृत्या
केराजन्यमनुष्ययुवानः राजन्यकं मानुष्यकं वृद्धाच्चेति वत्सन्य
म बाईकं केदाराण्यञ्च चात्वुञ् कैदार्यं कैदारकं गणिकाया
यञ् वक्तव्यम् गाणिक्यं ठञ्कवचिनश्च चात्केदारादपि कव
चिनां समूहो ग्लौचुकायनकावचिकं कैदारिकं ग्रामजनबंधुभ्यस्त